अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम्। विनश्यतीत्यपरभावस्यादिमाचष्टे। न पूर्वभावमाचष्टे न प्रतिषेधति ॥ २ ॥

अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह। ते यथावचनमभ्यूहितव्याः॥

न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति। उच्चावचाः पदार्था भवन्तीति गार्ग्यः। तद्य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम्।

आ इत्यर्वागर्थे। प्र परा इत्येतस्य प्रातिलोम्यम्। अभि इत्याभिमुख्यम्। प्रति इत्येतस्य प्रातिलोम्यम्। अति सु इत्यभिपूजितार्थे। निर् दुर् इत्येतयोः प्रातिलोम्यम्। नि अव इति विनिग्रहार्थीयौ। उद् इत्येतयोः प्रातिलोम्यम्। सम् इत्येकीभावम्। वि अप इत्येतस्य प्रातिलोम्यम्। अनु इति सादृश्यापरभावम्। अपि इति संसर्गम्। उप इत्युपजनम्। परि इति सर्वतोभावम्। अधि इत्युपरिभावमैश्वर्यं वा। एवमुच्चावचानर्थान्प्राहुः। त उपेक्षितव्याः ॥ ३ ॥

अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति। अप्युपमार्थे। अपि कर्मोपसंग्रहार्थे। अपि पदपूरणाः। तेषामेते चत्वार उपमार्थे भवन्ति।

इवेति भाषायां च। अन्वध्यायं च।

अग्निरिव। इन्द्र इव। इति।

नेति प्रतिषेधार्थीयो भाषायाम्। उभयमन्वध्यायम्।

नेन्द्रं देवममंसत।

इति प्रतिषेधार्थीयः। पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति।

दुर्मदासो न सुरायाम्।

---

१. ऋ. १०. ८४.२; १०१.३.
२. ऋ. १०. ८४.५; १११.२; १७३.२.
३. ऋ. १०. ८६.१.
४. ऋ. ८.२. १२.

इत्युपमार्थीयः । उपरिष्टादुपाचारस्तस्य येनोपमिमीते ।

चिदित्येषोऽनेककर्मा । आचार्यश्चिदिदं ब्रूयात् । इति पूजायाम् । आचार्यः कस्मात् । आचार्य आचारं ग्राहयति । आचिनोत्यर्थान् । आचिनोति बुद्धिमिति वा । दधिचित् । इत्युपमार्थे । कुल्माषांश्चिदाहर । इत्यवकुत्सिते । कुल्माषाः कुलेषु सीदन्ति ।

नु इत्येषोऽनेककर्मा । इदं नु करिष्यति । इति हेत्वपदेशे । कथं नु करिष्यति । इत्यनुपृष्टे । नन्वेतदकार्षीत् । इति च । अथाप्युपमार्थे भवति ।

वृक्षस्य नु ते पुरुहूत वयाः ।[1]

वृक्षस्येव ते पुरुहूत शाखाः । वयाः शाखा वेतेः । वातायना भवन्ति । शाखाः खशयाः । शक्नोतेर्वा ।

(अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात् स कर्मोपसंग्रहः ।)

चेति समुच्चयार्थ उभाभ्यां संप्रयुज्यते ।

अहं च त्वं च वृत्रहन् ।[2] इति ।

एतस्मिन्नेवार्थे ।

देवेभ्यश्च पितृभ्य आ ।[3] इत्याकारः ।

वेति विचारणार्थे ।

हन्ताहं पृथिवीमिमां नि दधानीह वेह वा ।[4] इति ।

अथापि समुच्चयार्थे भवति ॥ ४ ॥

वायुर्वा त्वा मनुर्वा त्वा ।[5] इति ।

---

१. ऋ. १. २४. ३

२. ऋ. ८. ६२. ११

३. ऋ. १०. १६. ११

४. ऋ. १०. ११९. ९

५. तै. स. १. ७. ७. २; का. सं. १३ १४.

अह इति च ह इति च विनिग्रहार्थीया। पूर्वेण संप्रयुज्येते। अयमहेदं करोत्वयमिदम्। इदं ह करिष्यतीदं न करिष्यतीति।

अथाप्युकार एतस्मिन्नेवार्थ उत्तरेण। मृषेमे वदन्ति सत्यमु ते वदन्तीति। अथापि पदपूरणः।

## इदमु। तदु।

हीत्येषोऽनेककर्मा। इदं हि करिष्यति। इति हेत्वपदेशे। कथं हि करिष्यति। इत्यनुपृष्टे। कथं हि व्याकरिष्यति। इत्यसूयायाम्।

किलेति विद्याप्रकर्षे। एवं किलेति। अथापि नु ननु इत्येताभ्यां संप्रयुज्यतेऽनुपृष्टे। न किलैवम्। ननु किलैवम्।

मेति प्रतिषेधे। मा कार्षीः। मा हार्षीरिति च।

खल्विति च। खलु कृत्वा। खलु कृतम्। अथापि पदपूरणः। एवं खलु तद् बभूवेति।

शश्वदिति विचिकित्सार्थीयो भाषायाम्। शश्वदेवम्। इत्यनुपृष्टे। एवं शश्वत्। इत्यस्वयं पृष्टे।

नूनमिति विचिकित्सार्थीयो भाषायाम्। उभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्च।

अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः संप्रदित्सांचकार। स इन्द्र एत्य परिदेवयांचक्रे॥५॥

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम्।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति॥[3]

न नूनमस्त्यद्यतनम्। नो एव श्वस्तनम्। अद्यास्मिन् द्यवि। द्युरित्यह्नो नामधेयम्। द्योतत इति सतः। श्व उपाशंसनीयः कालः। ह्यो हीनः कालः।

---

१. ऋ. ४. ५१. ५
२. ऋ. १. १२. १
३. ऋ. १. १७०. १

कस्तद्वेद यदद्भुतम्। कस्तद्वेद यदभूतम्। इदमपीतरदद्भुतमभूतमिव। अन्यस्य चित्तम्। अभिसंचरेण्यमभिसंचारि। अन्यो नानेयः। चित्तं चेततेः। उताधीतं विनश्यतीति। अप्याध्यातं विनश्यति। आध्यातमभिप्रेतम्।

अथापि पदपूरणः ॥ ६ ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।

शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥[1]

सा ते प्रतिदुग्धां वरं जरित्रे। वरो वरयितव्यो भवति। जरिता गरिता। दक्षिणा मघोनी मघवती। मघमिति धननामधेयम्। मंहतेर्दानकर्मणः। दक्षिणा दक्षतेः समर्धयतिकर्मणः। व्यृद्धं समर्धयतीति। अपि वा प्रदक्षिणागमनात्। दिशमभिप्रेत्य। दिग्घस्तप्रकृतिर्दक्षिणो हस्तः। दक्षतेरुत्साहकर्मणः। दाशतेर्वा स्याद् दानकर्मणः। हस्तो हन्तेः। प्राशुर्हनने। देहि स्तोतृभ्यः कामान्। मास्मानतिदंहीः। मास्मानतिहाय दाः। भगो नोऽस्तु। बृहद्वदेम स्वे वेदने। भगो भजतेः। बृहदिति महतो नामधेयम्। परिवृढं भवति। वीरवन्तः कल्याणवीरा वा। वीरो वीरयत्यमित्रान्। वेतेर्वा स्याद्गतिकर्मणः वीरयतेर्वा।

सीमिति परिग्रहार्थीयो वा पदपूरणो वा।

प्र सीमादित्यो असृजत्[2]।

प्रासृजदिति वा। प्रासृजत् सर्वत इति वा।

वि सीमतः सुरुचो वेन आवः[3] इति च।

व्यवृणोत् सर्वत आदित्यः। सुरुच आदित्यरश्मयः। सुरोचनात्। अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम्। सीम्नः सीमतः सीमातो मर्यादातः। सीमा मर्यादा। विषीव्यति देशाविति। त्व इति विनिग्रहार्थीयम्। सर्वनामानुदात्तम्। अर्धनामेत्येके ॥ ७ ॥

---

१. ऋ. २. ११. २१.

२. ऋ. २. २८. ४.

३. अ. वे. ४. १. १; ५ ६. १; सा. वे. १. ३२१; वा. सं. १३. ३.

ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु ।

ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥[1]

इत्यृत्विक्कर्मणां विनियोगमाचष्टे । ऋचामेकः पोषमास्ते पुपुष्वान् । होता । ऋगर्चनी । गायत्रमेको गायति शक्वरीषु । उद्गाता । गायत्रं गायतेः स्तुतिकर्मणः । शक्वर्य ऋचः । शक्नोतेः ।

तद् यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वम्[2] ।

इति विज्ञायते । ब्रह्मैको जाते जाते विद्यां वदति । ब्रह्मा सर्वविद्यः । सर्वं वेदितुमर्हति । ब्रह्मा परिवृढः श्रुततः । ब्रह्म परिवृढं सर्वतः । यज्ञस्य मात्रां विमिमीत एकः । अध्वर्युः । अध्वर्युरध्वरयुः । अध्वरं युनक्ति । अध्वरस्य नेता । अध्वरं कामयत इति वा । अपि वाधीयाने युरुपबन्धः । अध्वर इति यज्ञनाम । ध्वरतिर्हिंसाकर्मा । तत्प्रतिषेधः ।

निपात इत्येके । तत्कथमनुदात्तप्रकृति नाम स्यात् । दृष्टव्ययं तु भवति ।

उत त्वं सख्ये स्थिरपीतमाहुः ।[3] इति द्वितीयायाम् ।

उतो त्वस्मै तन्वं१ वि सस्रे ।[4] इति चतुर्थ्याम् ।

अथापि प्रथमाबहुवचने ॥ ८ ॥

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।

आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥[5]

---

१. ऋ. १०. ७१. ११.

२. तुलना : कौ. ब्रा. २३. २, तैभज ऐ. ब्रा. ५. ७. ३.

३. ऋ. १०. ७१. ५.

४. ऋ. १०. ७१. ४.

५. ऋ. १०. ७१. ७.

अक्षिमन्तः कर्णवन्तः सखायः । अक्षि चष्टेः । अनक्तेरित्याग्रायणः ।

तस्मादेते व्यक्ततरे इव भवतः ।

इति ह विज्ञायते । कर्णः कृन्ततेः । निकृत्तद्वारो भवति । ऋच्छतेरित्याग्रायणः ।

ऋच्छन्तीव खे उदगन्तामे ।

इति ह विज्ञायते । मनसां प्रजवेष्वसमा बभूवुः । आस्यदघ्ना अपरे । उपकक्षदघ्ना अपरे । आस्यमस्यतेः । आस्यन्दत एनदन्नमिति वा । दघ्नं दघ्यतेः स्रवतिकर्मणः । दस्यतेर्वा स्यात् । विदस्ततरं भवति । प्रस्नेया ह्रदा इवैके ददृशिरे । प्रस्नेया स्नानार्हाः । ह्रदो ह्रादतेः शब्दकर्मणः । ह्लादतेर्वा स्याच्छीतीभावकर्मणः ।

अथापि समुच्चयार्थे भवति ।

पर्याया इव त्वदाश्विनम् ।

आश्विनं च पर्यायाश्चेति ।

अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थका । कमीमिद्विति ॥ ९ ॥

निष्ट्वक्त्रासश्चिदिन्नरो भूरितोका वृकादिव ।

बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम्[3] ॥

शिशिरं जीवनाय । शिशिरं शृणातेः शम्नातेर्वा ।

एमेनं सृजता सुते ।

आसृजतैनं सुते ।

---

१. અવતરણનું મૂળ શોધી શકાતું નથી.

२ ऋो. मा. १७. ४.

३. અવતરણનું મૂળ શોધી શકાતું નથી.

४. ऋ. १. ९. २; अ. वे. २०. ७१. ८.

तमिद्वर्धन्तु नो गिरः।[1]

तं वर्धयन्तु नो गिरः स्तुतयः। गिरो गृणातेः॥

अयमु ते समतसि।[2]

अयं ते समतसि।

इवोऽपि दृश्यते। सु विदुरिव। सु विज्ञायेते इव।

अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये॥ १०॥

हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्।

शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम॥[3] इति।

नरकं न्यरकं नीचैर्गमनम्। नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा।

अथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपृष्टे। न चेत् सुरां पिबन्तीति। सुरा सुनोतेः। एवमुच्चावचेष्वर्थेषु निपतन्ति। त उपेक्षितव्याः॥ ११॥

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि। नामाख्याते चोपसर्गनिपाताश्च।

तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च।[न सर्वाणीति गार्ग्यो वैयाकरणानां चैके] तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन विकारेणान्वितौ स्याताम्।[ ] संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीति।

अथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात् सर्वं तत् सत्त्वं तथाचक्षीरन्। यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्यात्। यत् किञ्चित्तृन्द्यात् तृणं तत्।

---

१. ऋ. ८. ९२. २१; ९. ६१. १४.

२. ऋ. १. ३०. ४; अ. वे. २०. ४५ १; सा. वे. १. १८३; २. ९४९.

३. ऋ. खिल. १०. १०६. १.

अथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात्। तत्रैवं स्थूणा दरशया वा संजनी च स्यात् ॥ १२ ॥

अथापि य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्। पुरुषं पुरिशय इत्याचक्षीरन्। अष्टेत्यश्वम्। तर्दनमिति तृणम्।

अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति। प्रथनात्पृथिवीत्याहुः। क एनामप्रथयिष्यत्। किमाधारश्चेति।

अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान्त्संचस्कार शाकटायनः। एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च।

अथापि सत्त्वपूर्वो भाव इत्याहुः। अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति।

तदेतन्नोपपद्यते ॥ १३ ॥

यथो हि नु वा एतत् तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन विकारेणान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति।

यथो एतद् यः कश्च तत्कर्म कुर्यात् सर्वं तत् सत्त्वं तथाचक्षीरन्निति पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इति।

एतेनैवोत्तरः प्रत्युक्तः।

यथो एतद् यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति।

यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः। प्रथनात्पृथिवीत्याहुः। क एनामप्रथयिष्यत् किमाधारश्चेति। अथ वै दर्शनेन पृथुः। अप्रथिता चेदप्यन्यैः। अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते।

यथो एतत्पदेभ्यः पदेतरार्धान्त्संचस्कारेति योऽनन्वितेऽर्थे संचस्कार स तेन गर्ह्यः। सैषा पुरुषगर्हा न शास्त्रगर्हा इति।

यथो एतदपरस्माद् भावात्पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति । बिल्वं भरणाद्वा भेदनाद्वा ॥ १४ ॥

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते । अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः । तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यम् । स्वार्थसाधकं च ।

यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सः । अनर्थका हि मन्त्राः । तदेतेनोपेक्षितव्यम् ।

नियतवाचो युक्तयो नियतानुपूर्व्या भवन्ति ।

अथापि ब्राह्मणेन रूपसंपन्ना विधीयन्ते ।

उरु प्रथस्व । इति प्रथयति ।[1]

प्रोहाणि ।[2] इति प्रोहति ।

अथाप्यनुपपन्नार्था भवन्ति ।

ओषधे त्रायस्वैनम् ।[3]

स्वधिते मैनं हिंसीः ।[4] इत्याह हिंसन् ।

अथापि विप्रतिषिद्धार्था भवन्ति ।

एक एव रुद्रोऽवतस्थे न द्वितीयः ।[5]

असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।[6]

---

१. वा. सं. १. २२; तै. सं. १. १. ८. १; वगेरे.

२. जुओ मा. सं. २. १५ प्रोहामि ।

३. तै. सं. १. २. १. १; का. सं. २. १; वगेरे.

४. वा. सं. ४. १; ५. ४२; तै. सं. १. २. १. १; वगेरे.

५. जुओ तै. सं. १. ८. ६. १.

६. वा. सं. १६. ५४.

अशत्रुरिन्द्र जज्ञिषे[1] ।

शतं सेना अजयत् साकमिन्द्रः[2] । इति ।

अथापि जानन्तं संप्रेष्यति ।

अग्नये समिध्यमानायानुब्रूहि ।[3] इति ।

अथाप्याहादितिः सर्वमिति ।

अदितिर्द्यौरदितिरन्तरिक्षम्[4] । इति ।

तदुपरिष्टाद् व्याख्यास्यामः ।
अथाप्यविस्पष्टार्था भवन्ति ।

अम्यक्[5] यादृश्मिन्[6] जारयायि[7] काणुका[8] ।
इति ॥ १५ ॥

अर्थवन्तः शब्दसामान्यात् ।

एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति ।[9]
इति च ब्राह्मणम् ।

क्रीळन्तौ पुत्रैर्नप्तृभिः[10] । इति ।

---

१. ऋ. १०. १३३. २; अ. २०. ९५. ३; सा. २. ११५२.
२. ऋ. १०. १०३. १; अ. १९. १३. २; सा. २. ११९९.
३. तै. सं. ६. ३. ७. १; मै. सं. १. ४. ११; श. ब्रा. २. ५. २. ९.
४. ऋ. १. ८९. १०.
५. એક જ વાર પ્રયુક્ત. ऋ. १. १६९. ३.
६. એક જ વાર પ્રયુક્ત. ऋ. ५. ४४. ८.
७. એક જ વાર પ્રયુક્ત. ऋ. ६. १२. ४.
८. એક જ વાર પ્રયુક્ત. ऋ. ८. ७७. ४.
९. गो. ब्रा. २. ६.
१०. ऋ. १०. ८५. ४२.

यथो एतन्नियतवाचो युक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतत्। यथा। इन्द्राग्नी। पितापुत्रौ। इति।

यथो एतद् ब्राह्मणेन रूपसंपन्ना विधीयन्त इत्युदितानुवादः स भवति।

यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत।

यथो एतद् विप्रतिपिद्धार्था भवन्तीति लौकिकेष्वप्येतत्। यथा। असपत्नोऽयं ब्राह्मणः। अनमित्रो राजा। इति।

यथो एतज्जानन्तं संप्रेष्यतीति जानन्तमभिवादयते। जानते मधुपर्कं प्राह। इति।

यथो एतददितिः सर्वमिति लौकिकेष्वप्येतत्। यथा। सर्वरसा अनुप्राप्ताः पानीयम्। इति।

यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति। पुरुषापराधः स भवति। यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति ॥ १६ ॥

[अथापीदमन्तरेण पदविभागो न विद्यते।]

अवसाय पद्वते रुद्र मृळ।[1] इति।

पद्वदवसं गावः पथ्यदनम्। अवतेर्गत्यर्थस्यासो नामकरणः। तस्मान्नावगृह्णन्ति।

अव सायाश्वान्।[2] इति।

स्यतिरुपसृष्टो विमोचने। तस्मादवगृह्णन्ति।

दूतो निर्ऋत्या इदमा जगाम।[3] इति।

पंचम्यर्थप्रेक्षा वा। षष्ठ्यर्थप्रेक्षा वा। आःकारान्तम्।

परो निर्ऋत्या आ चक्ष्व।[4] इति।

---

१. ऋ. १०, १६९. १.

२. ऋ. १. १०४. १.

३. ऋ. १०. १६५. १; अ. वे. ६. २७. १.

४. ऋ. १०. १६४. १; अ. वे २०. ९६. २३.

चतुर्थ्यर्थप्रेक्षा । एकाराान्तम् ।

[1]परः सन्निकर्षः संहिता। पदप्रकृतिः संहिता। पदप्रकृतीनि सर्वचरणानां पार्षदानि ।

अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति। तदेतेनोपेक्षितव्यम् । ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति।

इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति । इति ।[1]

वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे ।

अग्निरिव मन्यो त्विषितः सहस्व । इति ।[2]

तथाग्निर्मान्यवे मन्त्रे । त्विषितो ज्वलितः । त्विषिरित्यप्यस्य दीप्तिनाम भवति ।

अथापि ज्ञानप्रशंसा भवति । अज्ञाननिन्दा च ॥ १७ ॥

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।

योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥[3]

यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते ।

अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

स्थाणुस्तिष्ठतेः । अर्थोऽर्तेः । अरणस्थो वा ॥ १८

१. ऋ. ६. ४. ७; वा. सं. ३३. १३.

२. ऋ. १०. ८४. २; अ. वे. ४. ३१. २.

३ सं. ब्रा. ३.

४. જુઓ પાતંજલ મહાભાષ્ય ૧.૧.૧. ત્યાં તેમજ મન્ત્રબ્રાહ્મણના સાયણભાષ્યમાં પહેલું ચરણ यद्गृहीतमविज्ञातं એ પ્રમાણે છે.

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥[1]

अप्येकः पश्यन्न पश्यति वाचम् । अपि च शृण्वन्न शृणोत्येनाम् । इत्यविद्वांसमाहार्धम् । अप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते । ज्ञानं प्रकाशनमर्थस्याह । अनया वाचा । उपमोत्तमया वाचा । जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु । यथा स एनां पश्यति स शृणोति । इत्यर्थज्ञप्रशंसा । तस्योत्तरा भूयसे निर्वचनाय ॥ १९ ॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥[2]

अप्येकं वाक्सख्ये । स्थिरपीतमाहू रममाणं विपीतार्थम् । देवसख्ये । रमणीये स्थान इति वा । विज्ञातार्थम् । यं नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वपि । अधेन्वा ह्येष चरति मायया । वाक्प्रतिरूपया । नास्मै कामान्दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु यो वाचं श्रुतवान् भवत्यफलामपुष्पामिति । अफलास्मा अपुष्पा वाग्भवतीति वा । किंचित्पुष्पफलेति वा । अर्थं वाचः पुष्पफलमाह । याज्ञदैवते पुष्पफले । देवताध्यात्मे वा ।

साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः । वेदं च वेदाङ्गानि च । बिल्मं भिल्मं भासनमिति वा ।

एतावन्तः समानकर्माणो धातवः । धातुर्दधातेः । एतावन्त्यस्य सत्त्वस्य नामधेयानि । एतावतामर्थानामिदमभिधानम् । नैघंटुकमिदं देवतानाम् । प्राधान्येनेदमिति । तद् यदन्यदैवते मन्त्रे निपतति नैघंटुकं तत् ।

अश्वं न त्वा वारवन्तम् ।[3]

१. ऋ. १०. ७१. ४.

२. ऋ. १०. ७१. ५.

३. ऋ. १. २७. १; सा. वे. १. १७; २. ९८४.

अश्वमिव त्वा वालवन्तम् । वाला दंशवारणार्था भवन्ति । दंशो दशतेः ।

मृगो न भीमः कुचरो गिरिष्ठाः ।[1]

मृग इव भीमः कुचरो गिरिष्ठाः । मृगो मार्ष्टेर्गतिकर्मणः । भीमो बिभ्यत्यस्मात् । भीष्मोऽप्येतस्मादेव । कुचर इति चरति कर्म कुत्सितम् । अथ चेद् देवताभिधानम् । क्वायं न चरतीति । गिरिष्ठा गिरिस्थायी । गिरिः पर्वतः । समुद्गीर्णो भवति । पर्ववान् पर्वतः । पर्व पुनः पृणातेः प्रीणातेर्वा । अर्धमासपर्व । देवानस्मिन्प्रीणन्तीति । तत् प्रकृतीतरत्सन्धि-सामान्यात् । मेघस्थायी । मेघोऽपि गिरिरेतस्मादेव ।

*तद् यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवतमित्याचक्षते । तदुपरिष्टाद् व्याख्यास्यामः । नैघण्टुकानि नैगमानीहेह ॥ २० ॥*

इति प्रथमोऽध्यायः ।

---

१. ऋ. १, १५४. २; १०. १८०. २.



# अथ द्वितीयोऽध्यायः ।

अथ निर्वचनम् । तद् येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन विकारेणान्वितौ स्यातां तथा तानि निर्ब्रूयात् । अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत । केनचिद् वृत्तिसामान्येन । अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति । यथार्थं विभक्तीः सन्नमयेत् ।

प्रत्तमवत्तमिति धात्वादी एव शिष्येते । अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति । स्तः । सन्तीति । अथाप्यन्तलोपो भवति । गत्वा । गतमिति । अथाप्युपधालोपो भवति । जग्मतुः । जग्मुरिति । अथाप्युपधाविकारो भवति । राजा । दण्डीति । अथापि वर्णलोपो भवति । तत्त्वा यामि । इति । अथापि द्विवर्णलोपः । तृच इति । अथाप्यादिविपर्ययो भवति । ज्योतिः । घनः । बिन्दुः । वाट्य इति । अथाप्याद्यन्तविपर्ययो भवति । स्तोकाः । रज्जुः । सिकताः । तर्क्विति ।

अथाप्यन्तव्यापत्तिर्भवति ॥ १ ॥

ओघः । मेघः । नाघः । गाधः । वधूः । मध्विति । अथापि वर्णोपजनः । आस्थत् । द्वारः । भरूजेति ।

तद् यत्र स्वरादनन्तरान्तस्थान्तर्धातुर्भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति । तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत् । तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति । तद् यथैतत् । ऊतिः । मृदुः । पृथुः । पृषतः । कुणारुमिति ।

अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते । दमूनाः । क्षेत्रसाधा इति । अथापि नैगमेभ्यो भाषिकाः । उष्णम् । घृतमिति ।

अथापि प्रकृतय एवैकेषु भाष्यन्ते । विकृतय एकेषु । शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते । कम्बोजाः कम्बलभोजाः । कमनीयभोजा वा । कम्बलः कमनीयो भवति । विकारमस्यार्येषु भाषन्ते । शव इति । दातिर्लवनार्थे प्राच्येषु । दात्रमुदीच्येषु । एवमेकपदानि निर्ब्रूयात् ।

अथ तद्धितसमासेष्वेकपर्वसु वानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् । दण्ड्यः पुरुषः दण्डमर्हतीति वा । दण्डेन संपद्यत इति वा । दण्डो ददातेर्धारयतिकर्मणः । अक्रूरो ददते मणिमित्यभिभाषन्ते । दमनादित्यौपमन्यवः । दण्डमस्याकर्षतीति गर्हायाम् ।

कक्ष्या रज्जुरश्वस्य । कक्षं सेवते । कक्षो गाहतेः । क्स इति नामकरणः । ख्यातेर्वानर्थकोऽभ्यासः । किमस्मिन् ख्यानमिति । कषतेर्वा । तत्सामान्यान्मनुष्यकक्षः । बाहुमूलसामान्यादश्वस्य ॥ २ ॥

राज्ञः पुरुषो राजपुरुषः । राजा राजतेः । पुरुषः पुरि षादः । पुरि शयः । पूरयतेर्वा । पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य ।

यस्मात्परं नापरमस्ति किंचिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥[1]

इत्यपि निगमो भवति ।

विश्वकद्राकर्षः । वीति चकद्र इति श्वगतौ भाष्यते । द्रातीति गतिकुत्सना । कद्रातीति द्रातिकुत्सना । चकद्रातीति कद्रातीति सतोऽनर्थकोऽभ्यासः । तदस्मिन्नस्तीति विश्वकद्रः ।

कल्याणवर्णरूपः । कल्याणवर्णस्येवास्य रूपम् । कल्याणं कमनीयं भवति । वर्णो वृणोतेः । रूपं रोचतेः । एवं तद्धितसमासान्निर्ब्रूयात् ।

नैकपदानि निर्ब्रूयात् । नावैयाकरणाय । नानुपसन्नाय । अनिदंविदे वा । नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया । उपसन्नाय तु निर्ब्रूयात् । यो वालं विज्ञातुं स्यात् । मेधाविने । तपस्विने वा ॥ ३ ॥

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।

असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥

य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ।

तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्चनाह ॥

---

1. तै. आ. १०. १०. ३; म ना उ. १०. ४; श्वे. उ ३. ९.

अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।

यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।

यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥[1]

इति । निधिः शेवधिरिति ॥ ४ ॥

अथातोऽनुक्रमिष्यामः । गौरिति पृथिव्या नामधेयम् । यद् दूरं गता भवति । यच्चास्यां भूतानि गच्छन्ति । गातेर्वौकारो नामकरणः ।

अथापि पशुनामेह भवत्येतस्मादेव । अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति ।

गोभिः श्रीणीत मत्सरम् ।[2]

इति पयसः । मत्सरः सोमः । मन्दतेस्तृप्तिकर्मणः । मत्सर इति लोभनाम । अभिमत्त एनेन धनं भवति । पयः पिबतेर्वा प्यायतेर्वा । क्षीरं क्षरतेः । घसेर्वेरो नामकरणः । उशीरमिति यथा ।

अंशुं दुहन्तो अध्यासते गवि ।[3]

इत्यधिषवणचर्मणः । अंशुः शमष्टमात्रो भवति । अननाय शं भवतीति वा । चर्म चरतेर्वा । उच्चृतं भवतीति वा ।

अथापि चर्म च श्लेष्मा च ।

गोभिः सन्नद्धो असि वीळयस्व ।[4]

---

१. सं. ब्रा. ३.

२. ऋ. ९. ४६. ४.

३. ऋ. १०. ९४. ९.

४. ऋ ६. ४७ २६; अ० वे० ६. १२५. १.

इति रथस्तुतौ। अथापि स्नाव च श्लेष्मा च।

गोभिः सन्नद्धा पतति प्रसूता।[१]

इतीषुस्तुतौ।

ज्यापि गौरुच्यते। गव्या चेत् ताद्धितम्। अथ चेन्न। गव्या गमयतीषूनिति ॥ ५ ॥

वृक्षेवृक्षे नियता मीमयद् गौस्ततो वयः प्र पतान्पूरुषादः।[२]

वृक्षेवृक्षे धनुषिधनुषि। वृक्षो व्रश्चनात्। वृत्वा क्षां तिष्ठतीति वा। क्षा क्षियतेः। निवासकर्मणः। नियता मीमयद् गौः शब्दं करोति। मीमयतिः शब्दकर्मा। ततो वयः प्रपतन्ति। पुरुषानदनाय। विरिति शकुनिनाम। वेतेर्गतिकर्मणः। अथापीषुनामेह भवत्येतस्मादेव।

आदित्योऽपि गौरुच्यते।

उतादः परुषे गवि।[३]

पर्ववति भास्वतीत्यौपमन्यवः। अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम्। आदित्यतोऽस्य दीप्तिर्भवति।

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः।[४]

इत्यपि निगमो भवति। सोऽपि गौरुच्यते।

अत्राह गोरमन्वत।[५]

इति। तदुपरिष्टाद् व्याख्यास्यामः। सर्वेऽपि रश्मयो गाव उच्यन्ते ॥६॥

---

१. ऋ. ६. ७५. ११; वा. सं. २९. ४८

२. ऋ. १०. २७. २२.

३. ऋ. ६. ५६. ३.

४. वा. सं. १८. ४०; श. ब्रा. ९. ४. १. ९.

५. ऋ. १. ८४. १५; अ. वे. २०. ४१ ३; सा. वे. १. १४७; २. २६५.

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृंगा अयासः।

अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥[१]

तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृंगा बहुशृंगाः। भूरीति बहुनो नामधेयम्। प्रभवतीति सतः। शृंगं श्रयतेर्वा। शृणातेर्वा। शम्नातेर्वा। शरणायोद्गतमिति वा। शिरसो निर्गतमिति वा। अयासोऽयनाः। तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि। पादः पद्यतेः। तन्निधानात् पदम्। पशुपादप्रकृतिः प्रभागपादः। प्रभागपादसामान्यादितराणि पदानि।

एवमन्येषामपि सत्त्वानां संदेहा विद्यन्ते। तानि चेत् समानकर्माणि समाननिर्वचनानि। नानाकर्माणि चेन्नानानिर्वचनानि। यथार्थं निर्वक्तव्यानि। इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि।

तत्र निर्ऋतिर्निरमणात्। ऋच्छतेः कृच्छ्रापत्तिरितरा। सा पृथिव्या संदिह्यते। तयोर्विभागः। तस्या एषा भवति ॥ ७ ॥

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्।

स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश ॥[२]

बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः। वर्षकर्मेति नैरुक्ताः। य ईं चकारेति करोतिकिरती संदिग्धौ वर्षकर्मणा। न सो अस्य वेद मध्यमः। स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम्। स मातुर्योनौ। मातान्तरिक्षम्। निर्मीयन्तेऽस्मिन् भूतानि। योनिरन्तरिक्षम्। महानवयवः। परिवीतो वायुना। अयमपीतरो योनिरेतस्मादेव। परियुतो भवति। बहुप्रजा भूमिमापद्यते वर्षकर्मणा।

---

१. ऋ. १. १५४. ६.

२. ऋ. १. १६४. ३२; अ. वे. ९. १०. १०.

शाकपूणिः संकल्पयाञ्चक्रे। सर्वा देवता जानानीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव। तां न जज्ञे। ता पप्रच्छ। विविदिषाणि त्वेति। सास्मा एतामृचमादिदेश। एषा मद्देवतेति ॥ ८ ॥

अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता।

सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥[१]

अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति। मायुं शब्दं करोति। मायुमिवादित्यमिति वा। वागेषा माध्यमिका। ध्वंसने मेघेऽधिश्रिता। सा चित्तिभिः कर्मभिर्नीचैर्निकरोति मर्त्यम्। विद्युद्भवन्ती प्रत्यूहते वव्रिम्। वव्रिरिति रूपनाम। वृणोतीति सतः। वर्षेण प्रच्छाद्य पृथिवीं तत्पुनरादत्ते ॥ ९ ॥

हिरण्यनामान्युत्तराणि पञ्चदश। हिरण्यं कस्मात्। ह्रियत आयम्यमानमिति वा। ह्रियते जनाज्जनमिति वा। हितरमणं भवतीति वा। हृदयरमणं भवतीति वा। हर्यतेर्वा स्यात् प्रेप्साकर्मणः।

अन्तरिक्षनामान्युत्तराणि षोडश। अन्तरिक्षं कस्मात्। अन्तरा क्षान्तं भवति। अन्तरेमे इति वा। शरीरेष्वन्तरक्षयमिति वा।

तत्र समुद्र इत्येतत् पार्थिवेन समुद्रेण संदिह्यते। समुद्रः कस्मात्। समुद्द्रवन्त्यस्मादापः। समभिद्रवन्त्येनमापः। संमोदन्तेऽस्मिन्भूतानि। समुदको भवति। समुनत्तीति वा। तयोर्विभागः।

तत्रेतिहासमाचक्षते। देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः। स शंतनुः कनीयानभिषेचयांचक्रे। देवापिस्तपः प्रतिपेदे। ततः शंतनो राज्ये द्वादश वर्षाणि देवो न ववर्ष। तमूचुर्ब्राह्मणाः। अधर्मस्त्वया चरितः। ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम्। तस्मात्ते देवो न वर्षतीति। स शंतनुर्देवापिं शिशिक्ष राज्येन। तमुवाच देवापिः। पुरोहितस्तेऽसानि। याजयानि च त्वेति। तस्यैतद् वर्षकामसूक्तम्। तस्यैषा भवति ॥ १० ॥

---

१. ऋ. १. १६४. २९; अ. वे. ९. १०. ७.

आर्ष्टिषेणो होत्रमृषिर्नि षीदन्देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥[1]

आर्ष्टिषेण ऋष्टिषेणस्य पुत्रः । इषितसेनस्येति वा । सेना सेश्वरा । समानगतिर्वा । पुत्रः पुरु त्रायते । निपरणाद्वा । पुन्नरकं ततस्त्रायत इति वा । होत्रमृषिर्निषीदन् । ऋषिर्दर्शनात् । स्तोमान्ददर्शेत्यौपमन्यवः ।

तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत् त ऋषयोऽभवन् तदृषीणामृषित्वम् ।[2]

इति विज्ञायते । देवापिर्देवानामाप्त्या स्तुत्या च प्रदानेन च देवसुमतिं देवानां कल्याणीं मतिं चिकित्वांश्चितनावान् । स उत्तरस्मादधरं समुद्रम् । उत्तर उद्धततरो भवति । अधरोऽधोरः । अधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा । तस्योत्तरा भूयसे निर्वचनाय ॥ ११ ॥

यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥[3]

शन्तनुः शं तनोऽस्त्विति वा । शमस्मै तन्वा अस्त्विति वा । पुरोहितः पुर एनं दधति । होत्राय वृतः कृपायमाणोऽन्वध्यायत् । देवश्रुतं देवा एनं शृण्वन्ति । वृष्टिवनिं वृष्टियाचिनम् । रराणो रातिरभ्यस्तः । बृहस्पतिर्ब्रह्मासीत् । सोऽस्मै वाचमयच्छत् । बृहदुपव्याख्यातम् ॥ १२ ॥

साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च । यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्यामः । आदित्यः कस्मात् । आदत्ते रसान् । आदत्ते भासं ज्योतिषाम् । आदीप्तो भासेति वा । अदितेः पुत्र इति वा । अल्पप्रयोगं त्वस्यैतदार्चाम्याम्नाये सूक्तभाक् ।

---

१. ऋ. १०. ९८. ५.
२. तै. आ. २.९.
३. ऋ. १०.९८.७.

सूर्यमादितेयम् ।[1]

अदितेः पुत्रम् । एवमन्यासामपि देवतानामादित्यप्रवादाः स्तुतयो भवन्ति । तद् यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येति ।

अथापि मित्रावरुणयोः ।

आदित्या दानुनस्पती ।[2]

दानपती । अथापि मित्रस्यैकस्य ।

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन ।[3]

इत्यपि निगमो भवति । अथापि वरुणस्यैकस्य

अथा वयमादित्य व्रते तव ।[4]

व्रतमिति कर्मनाम । वृणोतीति सतः । निवृत्तिकर्म वारयतीति सतः । अन्नमपि व्रतमुच्यते । यदावृणोति शरीरम् ॥ १३ ॥

स्वरादित्यो भवति । सु अरणः । सु ईरणः । स्वृतो रसान् । स्वृतो भासं ज्योतिषाम् । स्वृतो भासेति वा । एतेन द्यौर्व्याख्याता । पृश्निरादित्यो भवति । प्राश्नुत एनं वर्ण इति नैरुक्ताः । संस्प्रष्टा रसान् । संस्प्रष्टा भासं ज्योतिषाम् । संस्पृष्टो भासेति वा । अथ द्यौः । संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ।

नाक आदित्यो भवति । नेता रसानाम् । नेता भासाम् । ज्योतिषां प्रणयः । अथ द्यौः । कमिति सुखनाम । तत्प्रतिषिद्धं प्रतिषिध्येत ।

न वा अमुं लोकं जग्मुषे किं च नाकम् ।[5]

---

१. ऋ. १०.८८.११. (જુઓ નિરુક્ત ७.२९)

२. ऋ. १. १३६. ३; २. ४१. ६; सा. वे. २. २१२.

३. ऋ. ३. ५९. २.

४. ऋ. १. २४. १५; वा. सं. १२. १२.

५. અવતરણનું મૂળ શોધી શકાતું નથી.

न वा अमुं लोकं जग्मुषे किंच नासुखम् । पुण्यकृतो ह्येव तत्र गच्छन्ति ।

गौरादित्यो भवति । गमयति रसान् । गच्छत्यन्तरिक्षे । अथ द्यौः । यत्पृथिव्या अधिदूरं गता भवति । यच्चास्यां ज्योतींषि गच्छन्ति । विष्टवादित्यो भवति । आविष्टो रसान् । आविष्टो भासं ज्योतिषाम् । आविष्टो भासेति वा । अथ द्यौः । आविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ।

नभ आदित्यो भवति । नेता रसानां । नेता भासाम् । ज्योतिषां प्रणयः । अपि वा भन एव स्याद्विपरीतः ।

न न भातीति वा । एतेन द्यौर्व्याख्याता ।। १४ ।।

रश्मिनामान्युत्तराणि पंचदश । रश्मिर्यमनात् । तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः ।

दिङ्नामान्युत्तराण्यष्टौ । दिशः कस्मात् । दिशतेः । आसदनात् । अपि वाभ्यशनात् ।

तत्र काष्ठा इत्येतदनेकस्यापि सत्वस्य नाम भवति । काष्ठा दिशो भवन्ति । क्रान्त्वा स्थिता भवन्ति । काष्ठा उपदिशो भवन्ति । इतरेतरं क्रान्त्वा स्थिता भवन्ति । आदित्योऽपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति । आज्यन्तोऽपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति । आपोऽपि काष्ठा उच्यन्ते । क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् । १५ ।।

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।

वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ।।[1]

अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरम् । मेघः । शरीरं शृणातेः । शम्नातेर्वा । वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्त्याप इति । दीर्घं द्राघतेः । तमस्तनोतेः । आशयदाशेतेः । इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा । तस्मादिन्द्रशत्रुः ।

---

१. ऋ. १. ३२. १०.

तत्को वृत्रः । मेघ इति नैरुक्ताः । त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते । तत्रोपमार्थेन युद्धवर्णा भवन्ति । अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च । विवृद्धया शरीरस्य स्रोतांसि निवारयाञ्चकार । तस्मिन् हते प्रसस्यन्दिर आपः । तदभिवादिन्येषार्भवति ॥ १६ ॥

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।

अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥[1]

दासपत्नीर्दासाधिपत्न्यः । दासो दस्यतेः । उपदासयति कर्माणि । अहिगोपा अतिष्ठन् । अहिना गुप्ताः । अहिरयनात् । एत्यन्तरिक्षे ।

अयमपीतरोऽहिरेतस्मादेव । निर्ह्रसितोपसर्गः, आहन्तीति । निरुद्धा आपः पणिनेव गावः । पणिर्वणिग्भवति । पणिः पणनात् । वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति बिभर्तेः । वृत्रं जघ्निवान् । अपववार तत् । वृत्रो वृणोतेर्वा । वर्ततेर्वा । वर्धतेर्वा ।

यदवृणोत्तद् वृत्रस्य वृत्रत्वम्[2] । इति विज्ञायते । यदवर्तत तद् वृत्रस्य वृत्रत्वम्[2] । इति विज्ञायते । यदवर्धत तद् वृत्रस्य वृत्रत्वम् ।[2] इति विज्ञायते ॥ १७ ॥

रात्रिनामान्युत्तराणि त्रयोविंशतिः । रात्रिः कस्मात् । प्ररमयति भूतानि नक्तञ्चारीणि । उपरमयतीतराणि ध्रुवीकरोति । रातेर्वा स्याद्दानकर्मणः । प्रदीयन्तेऽस्यामवश्यायाः ।

उषोनामान्युत्तराणि षोडश । उषाः कस्मात् । उच्छतीति सत्याः । रात्रेरपरः कालः । तस्या एषा भवति ॥ १८ ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ॥

यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥[3]

---

१. ऋ. १. ३२. ११

२. अहीं अवतरणोनुं मूळ शोधी शकातुं नथी. जुओ निर्वचनसूचि-वृत्र.

३. ऋ. १. ११३·१; सा. वे. २. १०९९.

इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् । चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमम् । यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं राज्युपसे योनिमरिचत् स्थानम् । स्त्रीयोनिरभियुत एनां गर्भः ।

तस्या एषापरा भवति ॥ १९ ॥

**रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।**

**समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥**[1]

रुशद्वत्सा सूर्यवत्सा । रुशदिति वर्णनाम । रोचतेर्ज्वलतिकर्मणः । सूर्यमस्या वत्समाह । साहचर्यात् । रसहरणाद्वा । रुशती श्वेत्यागात् । श्वेत्या श्वततेः । अरिचत् कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः । कृष्णं कृष्यतेः । निकृष्टो वर्णः । अथैने संस्तौति । समानबन्धू समानबन्धने । अमृते अमरणधर्माणौ । अनूची अनूच्याविवीतरेतरमभिप्रेत्य । द्यावा वर्णं चरतः । ते एव द्यावौ । द्योतनात् । अपि वा द्यावा चरतस्तया सह चरत इति स्यात् । आमिनाने आमिन्वाने । अन्योन्यस्याध्यात्मं कुर्वाणे ।

अहर्नामान्युत्तराणि द्वादश । अहः कस्मात् । उपाहरन्त्यस्मिन् कर्माणि । तस्यैष निपातो भवति वैश्वानरीयायामृचि ॥ २० ॥

**अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः ।**

**वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥**[2]

अहश्च कृष्णं रात्रिः । शुक्लं चाहरर्जुनम् । विवर्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः । वैश्वानरो जायमान इव । उद्यन्नादित्यः । सर्वेषां ज्योतिषां राजा । अवाहन्नग्निर्ज्योतिषा तमांसि ।

मेघनामान्युत्तराणि त्रिंशत् । मेघः कस्मात् । मेहतीति सतः । आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः । उपर उपलो मेघो भवति । उपरमन्तेऽस्मिन्नभ्राणि । उपरता आप इति वा । तेषामेषा भवति ॥ २१ ॥

---

१. ऋ. १. ११३. २.

२. ऋ. ६. ९. १.

देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन् ।

त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥[1]

देवानां निर्माणे प्रथमा अतिष्ठन्माध्यमिका देवगणाः। प्रथम इति मुख्यनाम। प्रतमो भवति। कृन्तत्रमन्तरिक्षम्। विकर्तनं मेघानाम्। विकर्तनेन मेघानामुदकं जायते। त्रयस्तपन्ति पृथिवीमनूपाः। पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्ति। अनूपा अनुवपन्ति लोकान्स्वेन स्वेन कर्मणा। अयमपीतरोऽनूप एतस्मादेव। अनूप्यत उदकेन। अपि वान्वाबिति स्यात्। यथा प्रागिति। तस्यानूप इति स्यात्। यथा प्राचीनमिति। द्वा बृबूकं वहतः पुरीषं। वाय्वादित्या उदकम्। बृबूकमित्युदकनाम। ब्रवीतेः शब्दकर्मणः। भ्रंशतेर्वा। पुरीषं पृणातेः। पूरयतेर्वा ॥ २२ ॥

वाङ्नामान्युत्तराणि सप्तपञ्चाशत्। वाक् कस्मात्। वचेः। तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति। तद् यद्देवतावदु-परिष्टात्तद्व्याख्यास्यामः। अथैतन्नदीवत् ॥ २३ ॥

इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः।

पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥[2]

इयं शुष्मैः शोषणैः। शुष्ममिति बलनाम। शोषयतीति सतः। बिसं बिस्यतेर्भेदनकर्मणः। वृद्धिकर्मणो वा। सानु समुच्छ्रितं भवति। समुन्नुन्नमिति वा। महद्भिरूर्मिभिः। पारावतघ्नीं पारावारघातिनीम्। पारं परं भवति। अवारमवरम्। अवनाय सुप्रवृत्ताभिः शोभनाभिः स्तुतिभिः सरस्वतीं नदीं कर्मभिः परिचरेम।

उदकनामान्युत्तराण्येकशतम्। उदकं कस्मात्। उनत्तीति सतः।

नदीनामान्युत्तराणि सप्तत्रिंशत्। नद्यः कस्मात्। नदना इमा भवन्ति। शब्दवत्यः। बहुलमासां नैघण्टुकं वृत्तम्। आश्चर्यमिव प्राधान्येन।

---

१. ऋ. १०. २७. २३.

२. ऋ. ६. ६१. २.

तत्रेतिहासमाचक्षते । विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव ।

विश्वामित्रः सर्वमित्रः । सर्वं संसृतम् । सुदाः कल्याणदानः । पैजवनः पिजवनस्य पुत्रः । पिजवनः पुनः स्पर्धनीयजवो वा । अमिश्रीभावगतिर्वा । स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययौ । अनुययुरितरे । स विश्वामित्रो नदीस्तुष्टाव । गाधा भवतेति । अपि द्विवत् । अपि बहुवत् । तद् यद् द्विवदुपरिष्टात्तद् व्याख्यास्यामः । अथैतद्बहुवत् ॥ २४ ॥

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।

प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥[१]

उपरमध्वं मे वचसे सोम्याय सोमसम्पादिने । ऋतावरीर्ऋतवत्यः । ऋतमित्युदकनाम । प्रत्यृतं भवति । मुहूर्तमेवैरयनैरवनैर्वा । मुहूर्तो मुहुर्ऋतुः । ऋतुरर्तेर्गतिकर्मणः मुहुर्मूढ इव कालः । यावदभीक्ष्णं चेति । अभीक्ष्णमभिक्षणं भवति । क्षणः क्षणोतेः । प्रक्ष्णुतः कालः । कालः कालयतेर्गतिकर्मणः । प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय । कुशिकस्य सूनुः । कुशिको राजा बभूव । क्रोशतेः शब्दकर्मणः । क्रंशतेर्वा स्यात्प्रकाशयतिकर्मणः । साधु विक्रोशयिताऽर्थानामिति वा । नद्यः प्रत्यूचुः ॥ २५ ॥

इन्द्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनाम् ।

देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥[२]

इन्द्रोऽस्मानरदद्वज्रबाहुः । रदतिः खनतिकर्मा । अपाहन् वृत्रं परिधिं नदीनामिति व्याख्यातम् । देवोऽनयत्सविता । सुपाणिः कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः । प्रगृह्य पाणी देवान् पूजयन्ति । तस्य वयं प्रसवे याम उर्वीः । उर्व्य ऊर्णोतेः । वृणोतेरित्यौर्णवाभः । प्रत्याख्यायान्तत आशुश्रुवुः ॥ २६ ॥

---

१. ऋ. ३. ३३. ५.

२. ऋ. ३. ३३. ६.

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन।

नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥[१]

आशृणवाम ते कारो वचनानि। याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रम्। मर्यायेव कन्या परिष्वजनाय। निनमा इति वा।

अश्वनामान्युत्तराणि षड्विंशति.। तेषामष्टा उत्तराणि बहुवत्। अश्वः कस्मात्। अश्नुतेऽध्वानम्। महाशनो भवतीति वा। तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा। दधत् क्रन्दतीति वा। दधदाकारी भवतीति वा। तस्याश्ववद्देवतावच्च निगमा भवन्ति। तद् यद् देवतावदुपरिष्टात्तद् व्याख्यास्यामः। अथैतदश्ववत् ॥ २७ ॥

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि।

क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥[२]

अपि स वाजी वेजनवान्। क्षेपणमनु तूर्णमश्नुतेऽध्वानम्। ग्रीवायां बद्धः। ग्रीवा गिरतेर्वा। गृणातेर्वा। गृह्णातेर्वा। अपि कक्ष आसनीति व्याख्यातम्। क्रतुं दधिक्राः कर्म वा प्रज्ञां वा। अनुसंतवीत्वत्। तनोतेः पूर्वया प्रकृत्या निगमः। पथामङ्कांसि पथां कुटिलानि। पन्थाः पततेर्वा। पद्यतेर्वा। पन्थतेर्वा। अङ्कोऽञ्चतेः। आपनीफणदिति फणतेश्चर्करीतवृत्तम् ॥

दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय।

ज्वलतिकर्माण उत्तरे धातव एकादश।

तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि ॥ २८ ॥

## इति द्वितीयोऽध्यायः।

---

१. ऋ. ३. ३३. १०.

२. ऋ. ४. ४०. ४.



## ॥ अथ चतुर्थोऽध्यायः ॥

एकार्थमनेकशब्दमित्येतदुक्तम् । अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामः । अनवगतसंस्कारांश्च निगमान् । तदैकपदिकमित्याचक्षते ।

जहा जघानेत्यर्थः ॥ १ ॥

को नु मर्या अमिथितः सखा सखायमब्रवीत् ।

जहा को अस्मदीषते[1] ॥

मर्या इति मनुष्यनाम । मर्यादाभिधानं वा स्यात् । मर्यादा मर्यैरादीयते । मर्यादा मर्यादिनोर्विभागः । मेथतिराक्रोशकर्मा । अपापकं जघान कमहं जातु । कोऽस्मद्भीतः पलायते ।

निधा पाश्या भवति । यन्निधीयते । पाश्या पाशसमूहः । पाशः पाशयतेः । विपाशनात् ॥ २ ॥

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।

अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान्[2] ॥

वयो वेर्बहुवचनम् । सुपर्णाः सुपतना आदित्यरश्मयः उपसेदुरिन्द्रं याचमानाः । अपोर्णुह्याध्वस्तं चक्षुः । चक्षुः ख्यातेर्वा । चष्टे वा । पूर्धि पूरय देहीति वा । मुञ्चास्मान् पाशैरिव बद्धान् ॥

---

१. ऋ. ८. ४५. ३७.

२. ऋ. १०. ७३. ११; सा. वे. १. ३१९.

पार्श्वतः श्रोणितः शितामतः ।[1]

पार्श्वं पर्शुमयमङ्गं भवति । पर्शुः स्पृशतेः । संस्पृष्टा पृष्ठदेशम् । पृष्ठं स्पृशतेः । संस्पृष्टमङ्गैः । अङ्गमङ्गनात् । अञ्चनाद्वा । श्रोणिः श्रोणतेर्गतिचलाकर्मणः । श्रोणिश्चलतीव गच्छतः । दोः शितामं भवति । दोर्द्रवतेः । योनिः शितामेति शाकपूणिः, विपितो भवति । श्यामतो यकृत् इति तैटीकिः । श्यामं श्यायतेः । यकृद् यथा कथा च कृत्यते । शितिमांसतो मेदस्त इति गालवः । शितिः श्यतेः । मांसं माननं वा । मानसं वा । मनोऽस्मिन्त्सीदतीति वा । मेदो मेद्यतेः ॥ ३ ॥

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।

राधस्तन्नो विदद्वस उभयाहस्त्या भर[2] ॥

यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्तीति वा । त्रीणि मध्यमानि पदानि । त्वया नस्तद् दातव्यम् । अद्रिवन् । अद्रिरादृणात्येनेन । अपि वात्तेः स्यात् ।

ते सोमादो[3] । इति ह विज्ञायते ।

राध इति धननाम । राध्नुवन्त्यनेन । तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहर ।

उभौ समुब्धौ भवतः ।

दमूना दममना वा । दानमना वा । दान्तमना वा । अपि वा दम इति गृहनाम । तन्मना स्यात् । मनो मनोतेः ॥ ४ ॥

---

१. वा. सं. २१. ४३ नो अंश.

२. ऋ. ५. ३९. १; सा. वे. १. ३४५; २. ५२२.

३. ऋ. १०. ९४. ९. "यास्के टांकेल आ वैदिक निगम नथी मळ्युं", इति ह विज्ञायते सामान्य रीते ब्राह्मणोमांथी लीधेला उतारा माटे वपराय छे."

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि[1] ॥

अतिथिरभ्यतितो गृहान्भवति । अभ्येति तिथिषु परकुलानीति वा । परगृहाणीति वा । दुरोण इति गृहनाम । दुरवा भवन्ति दुस्तर्पाः । इमं नो यज्ञमुपयाहि विद्वान् । सर्वा अग्ने अभियुजो विहत्य शत्रूयतामाभर भोजनानि । विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा । धनानीति वा ।

मूषो मूषिका इत्यर्थः । मूषिकाः पुनर्मुष्णातेः । मूषोऽप्येतस्मादेव ॥५॥

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो
वित्तं मे अस्य रोदसी ॥[2]

सन्तपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवः । मूषिका इवास्नातानि सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा स्यात् । शिश्नानि व्यदन्तीति वा । सन्तपन्ति माध्यः कामाः । स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी । जानीतं मेऽस्य द्यावापृथिव्याविति ।

त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ । तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति । त्रितस्तीर्णतमो मेधया बभूव । अपि वा संख्यानामैवाभिप्रेतं स्यात् । एकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ ६ ॥

---

१. ऋ. ५. ४. ५; अ. वे. ७. ७३. ९.

२. ऋ. १. १०५. ८.

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।

सोम राजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥[१]

ईषणेन वैषणेन वार्षणेन वा। ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य । प्रवर्धय च न आयूंषि सोम राजन् अहानीव सूर्यो वासराणि। वासराणि वेसराणि विवासनानि गमनानीति वा।

कुरुतनेत्यनर्थका उपजना भवन्ति । कर्तनहन्तनयातनेति ।

जठरमुदरं भवति । जग्धमस्मिन्ध्रियते धीयते वा ॥ ७ ॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।

आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम्[२] ॥

मरुत्वानिन्द्र ! मरुद्भिः, तद्वान् । वृषभो वर्षितापाम् । रणाय रमणीयाय संग्रामाय । पिब सोमम् । अनुष्वधमन्वन्नम् । मदाय मदनीयाय जैत्राय । आसिञ्च स्वजठरे मधुन ऊर्मिम् । मधु सोममित्यौपमिकं माद्यतेः । इदमपीतरन्मध्वेतस्मादेव । त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम् ॥ ८ ॥

तितउ परिपवनं भवति । ततवद्वा । तुन्नवद्वा । तिलमात्रतुन्नमिति वा ॥ ९ ॥

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।

अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥[३]

सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेः । दुर्धावो भवति । कसतेर्वा स्याद्विपरीतस्य । विकसितो भवति । यत्र धीरा मनसा

१. ऋ. ६. ४. १२.

२. ऋ. ३. ४७. १; वा. सं. ७. ३८.

३. ऋ. १०. ७१. २.

वाचमक्रुपत प्रज्ञानम् । धीराः प्रज्ञानवन्तो ध्यानवन्तः । तत्र सखायः सख्यानि संजानते । भद्रैषां लक्ष्मीर्निहिताधिवाचि इति । भद्रं भगेन व्याख्यातम् । भजनीयं भूतानामभिद्रवणीयम् । भवद्रमयतीति वा । भाजनवद्वा । लक्ष्मीर्लाभाद्वा । लक्षणाद्वा । लप्स्यनाद्वा । लाञ्छनाद्वा । लषतेर्वा स्यात्प्रेप्साकर्मणः । लग्यतेर्वा स्यादाश्लेषकर्मणः । लज्जतेर्वा स्यादश्लाघाकर्मणः ।

शिप्रे इत्युपरिष्टाद्व्याख्यास्यामः ॥ १० ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।

यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥[1]

तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते । यदासावयुङ्क्त हरणानादित्यरश्मीन् । हरितोऽश्वानिति वा । अथ रात्री वासस्तनुते सिमस्मै ।

वेसरमहरवयुवती सर्वस्मात् । अपि वोपमार्थे स्यात् । रात्रीव वासस्तनुत इति । तथापि निगमो भवति ।

पुनः समव्यद्विततं वयन्ती ।[2] समनात्सीत् ॥ ११ ॥

इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा ।

मन्दू समानवर्चसा ॥[3]

इन्द्रेण हि संदृश्यसे संगच्छमानोऽबिभ्युषा गणेन । मन्दू मदिष्णू । युवां स्थः । अपि वा मन्दुना तेनेति स्यात् । समानव, वर्चसेत्येतेन व्याख्यातम् ॥ १२ ॥

१. ऋ. १. ११५. ४; अ. वे. २०. १२३. १; वा. सं. ३३. ३७.

२. ऋ. २. ३८. ४.

३. ऋ. १. ६. ७; अ. वे. २०. ४०. १; ७०. ३; सा. वे. २. २००.

ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः ।

हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥[१]

ईर्मान्ताः समीरितान्ताः । सुसमीरितान्ताः पृथ्वन्ता वा । सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा । अपि वा शिर आदित्यो भवति । यदनुशेते सर्वाणि भूतानि । मध्ये चैषां तिष्ठति । इदमपीतरच्छिर एतस्मादेव । समाश्रितान्येतदिन्द्रियाणि भवन्ति । संशूरणास दिव्यासो अत्याः । शूरः शवतेर्गतिकर्मणः । दिव्या दिविजाः । अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानम् । श्रेणिश इति । श्रेणिः श्रयतेः । समाश्रिता भवन्ति । यदाक्षिषुर्यदापन् । दिव्यमज्ममजनिमाजिमश्वाः ।

अस्त्यादित्यस्तुतिरश्वस्य । आदित्यादश्वो निरतष्ट इति ।

सूरादश्वं वसवो निरतष्ट ।[२] इत्यपि निगमो भवति ॥ १३ ॥

कायमानो वना त्वं यन्मातॄरजगन्नपः ।

न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥[३]

कायमानश्चायमानः कामयमान इति वा । वनानि । त्वं यन्मातॄरपोऽगम उपशाम्यन् । न तत्ते अग्ने प्रमृष्यते निवर्तनम् । दूरे यत् सन्निह भवसि जायमानः ।

लोधं नयन्ति पशु मन्यमानाः ।[४]

लुब्धमृषिं नयन्ति पशु मन्यमानाः ।

---

१ ऋ. १. १६३. १०; वा. सं. २९. २१.

२. ऋ. १. १६३. २; वा. सं. २९. १३.

३. ऋ ३. ९ २; सा. वे १. ५३.

४. ऋ. ३. ५३. २३.

शीरं पावकशोचिषम् ।[१]

पावकदीप्तिम् । अनुशायिनमिति वा । आशिनमिति वा ॥ १४ ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके ।

बभ्रू यामेषु शोभेते ॥[२]

कनीनके कन्यके । कन्या कमनीया भवति । क्वेयं नेतव्येति वा । कमनेनानीयत इति वा । कनतेर्वा स्यात्कान्तिकर्मणः । कन्ययोरधिष्ठानप्रवचनानि । सप्तम्या एकवचनानीति शाकपूणिः । विद्रधयोर्दारुपाद्रोः । दारु दृणातेर्वा । द्रूणातेर्वा । तस्मादेव द्रु । नवे नवजाते । अर्भके अवृद्धे । ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते । बभ्र्वोरश्वयोः संस्तवः ।

इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्यायाह ।

सुवास्त्वा अधि तुग्वनि ।[३]

सुवास्तुर्नदी । तुग्व तीर्थं भवति । तूर्णमेतदायन्ति ।

कुविन्नंसन्ते मरुतः पुनर्नः ।[४]

पुनर्नो नमन्ते मरुतः । नसन्त इत्युपरिष्टाद्व्याख्यास्यामः ।

ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् ।[५]

ये ते मदा आहननवन्त वंचनवन्तस्तैरिन्द्रं चोदय दानाय मघम् ॥ १५ ॥

---

१. ऋ. ३. ९. ८; ८. ४३ ३१; ८. १०२. ११.
२. ऋ ४. ३२. ३३.
३. ऋ. ८. १९. ३७.
४. ऋ. ७. ५८. ५.
५. ऋ. १. ७५. ५.

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ।

अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥[1]

उपादर्शि शुन्ध्युवः । शुन्ध्युरादित्यो भवति । शोधनात् । तस्यैव वक्षो भासाध्यूढम् । इदमपीतरद्वक्ष एतस्मादेव । अध्यूढं काये । शकुनिरपि शुन्ध्युरुच्यते । शोधनादेव । उदकचरो भवति । आपोऽपि शुन्ध्युव उच्यन्ते । शोधनादेव । नोधा ऋषिर्भवति । नवनं दधाति । स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते । अद्मसत् । अद्माऽन्नं भवति । अद्मसादिनीति वा । अद्मसानिनीति वा । ससतो बोधयन्ती । शश्वत्तमागात्पुनरेयुषीणाम् । स्वपतो बोधयन्ती शाश्वतिकत-मागात्पुनरेयुषीणाम् ।

ते वाशीमन्त इष्मिणः ।[2]

ईषणिन इति वेषणिन इति वार्षणिन इति वा । वाशीति वाङ्नाम । वाश्यत इति सत्याः ।

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।[3]

अभिवहनस्तुतिमभिपवणप्रवादां स्तुतिं मन्यन्ते । ऐन्द्री त्वेव शस्यते ।

परितक्म्येत्युपरिष्टाद् व्याख्यास्यामः ॥ १६ ॥

सुविते सु इते सूते । सुगते प्रजायामिति वा ।

सुविते मा धाः ।[4] इत्यपि निगमो भवति ।

---

१. ऋ. १. १२४. ४.
२. ऋ. १. ८७. ६.
३. ऋ. ३. ५३. ३.
४. तै. सं. १. २. १०. २; का. सं. २. ८.

दयतिरनेककर्मा ।

नवेन पूर्वं दयमानाः स्याम । इत्युपदयाकर्मा ।

य एक इद्विदयते वसु ।[२] इति दानकर्मा वा विभागकर्मा वा ।

दुर्वर्तुर्भीमो दयते वनानि ।[३] इति दहतिकर्मा । दुर्वर्तुर्दुर्वारः ।

विदद्वसुर्दयमानो वि शत्रून् ।[४] इति हिंसाकर्मा ॥

इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान् ।

अहं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत् ।[५]

दयमान इति ।

नू चिदिति निपातः । पुराणनवयोः । नू चेति च ।

अद्या चिन्नू चित्तदपो नदीनाम् ।[६]

अद्य च पुरा च तदेव कर्म नदीनाम् ।

नू च पुरा च सदनं रयीणाम् ।[७]

अद्य च पुरा च सदनं रयीणाम् । रयिरिति धननाम । रातेर्दानकर्मणः ॥ १७ ॥

---

१. का. सं. १९. ३; तै. ब्रा. १११. ५. १३. १.
२. ऋ. १. ८४. ७; अ. वे. २०. ६३. ४; सा वे. १. ३८९; २. ६९१.
३. ऋ. ६. ६. ५.
४. ऋ. ३. ३४. १; अ. वे. २०. ११. १.
५. અવતરણનું મૂળ શોધી શકાતું નથી. દુર્ગ પણ છેલ્લું જ ચરણ આપે છે.
६. ऋ. ६. ३०. ३.
७. ऋ. १. ९६. ७.

विद्याम तस्य ते वयमकूपारस्य दावने ।[1]

विद्याम तस्य ते वयमकुपरणस्य दानस्य । आदित्योऽप्यकूपार उच्यते । अकूपारो भवति दूरपारः । समुद्रोऽप्यकूपार उच्यते । अकूपारो भवति महापारः । कच्छपोऽप्यकूपार उच्यते । अकूपारो न कूपमृच्छतीति । कच्छपः कच्छं पाति । कच्छेन पातीति वा । कच्छेन पिबतीति वा । कच्छः खच्छः खच्छदः । अयमपीतरो नदीकच्छ एतस्मादेव । कमुदकम् । तेन छाद्यते ।

शिशीते शृङ्गे रक्षसे विनिक्षे ।[2]

निश्यति शृङ्गे रक्षसो विनिक्षणाय । रक्षो रक्षितव्यमस्मात् । रहसि क्षणोतीति वा । रात्रौ नक्षत इति वा ।

अग्निः सुतुकः सुतुकेभिरश्वैः ।[3]

सुतुकनः सुतुकनैरिति वा । सुप्रजाः सुप्रजोभिरिति वा ।

सुप्रायणा अस्मिन्यज्ञे वि श्रयन्ताम् ।[4]

सुप्रगमनाः ॥ १८ ॥

देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ।[5]

देवा नो यथा सदा वर्धनाय स्युः । अप्रायुवोऽप्रमाद्यन्तः । रक्षितारश्च । अहन्यहनि ।

---

१. ऋ. ५. ३९. २; सा. वे. २. ५२३.

२. ऋ. ५. २. ९.

३. ऋ. १०. ३. ७.

४. वा. सं. २८. ५.

५. ऋ. १. ८९. १; वा. सं. २५. १४.

च्यवन ऋषिर्भवति । च्यावयिता स्तोमानाम् । च्यवानमित्यप्यस्य निगमा भवन्ति ।

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।[१]

युवं च्यवनम् । सनयं पुराणम् । यथा रथं पुनर्युवानं चरणाय ततक्षथुः । युवा प्रयौति कर्माणि । तक्षतिः करोतिकर्मा ।

रजो रजतेः । ज्योती रज उच्यते । उदकं रज उच्यते । लोका रजांस्युच्यन्ते । असृगहनी रजसी उच्येते ।

रजांसि चित्रा वि चरन्ति तान्यवः ।[२] इत्यपि निगमो भवति ।

हरो हरतेः । ज्योतिर्हर उच्यते । उदकं हर उच्यते । लोका हरांस्युच्यन्ते । असृगहनी हरसी उच्येते ।

प्रत्यग्ने हरसा हरः शृणीहि ।[३] इत्यपि निगमो भवति ।

जुहुरे वि चितयन्तः ।[४] जुह्विरे विचेतयमानाः ।

व्यन्त इत्येषोऽनेककर्मा ।

पदं देवस्य नमसा व्यन्तः ।[५] इति पश्यतिकर्मा ।

वीहि शूर पुरोळाशम् ।[६] इति खादतिकर्मा ।

---

१. ऋ. १०. ३९. ४.

२. ऋ. ५. ६३. ५.

३. ऋ. १०. ८७. २५; सा. वे. १. ६५.

४. ऋ. ५. १९. २.

५. ऋ. ६. १. ४.

६. ऋ. ३. ४१. ३; अ. वे. २०. २३. ३.

पीतं पातं पयस उस्रियायाः ।[1] अपीतं पिबतं पयस उस्रियायाः ।

उस्रियेति गोनाम । उस्राविणोऽस्यां भोगाः । उस्रेति च ।

त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः ।

गोभिः क्राणा अनूषत ॥[2]

गोभिः कुर्वाणा अस्तोषत ।

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।[3]

आसिञ्च हरिं द्रोरुपस्थे द्रुममयस्य । हरिः सोमो हरितवर्णः । अयमपीतरो हरिरेतस्मादेव । वाशीभिस्तक्षताश्मन्मयीभिः । वाशीभिरश्ममयीभिरिति वा । वाग्भिरिति वा ।

स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ।[4]

स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य । मा शिश्नदेवा अब्रह्मचर्याः । शिश्नं श्नथतेः । अपि गुर्ऋतं नः । सत्यं वा यज्ञं वा ॥ १९ ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।

उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥[5]

आगमिष्यन्ति तान्युत्तराणि युगानि । यत्र जामयः करिष्यन्त्यजामिकर्माणि । जाम्यतिरेकनाम । बालिशस्य वा । समानजातीयस्य वा उपजनः ।

---

१. ऋ. १. १५३. ४; अ. वे. ७. ७३. ५.
२. जुओ ऋ. १ १३४. २.
३. ऋ. १०. १०१. १०.
४. ऋ. ७. २१. ५.
५. ऋ. १०. १०. १०; अ. वे. १८. १. ११.

उपयेहि वृषभाय बाहुम् । अन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ २० ॥

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।

उत्तानयोश्चम्वो३ र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥[१]

द्यौर्मे पिता पाता वा पालयिता वा जनयिता । नाभिरत्र बन्धुर्मे माता पृथिवी महतीयम् । बन्धुः संबन्धनात् । नाभिः संनहनात् ।

नाभ्या सन्नद्धा गर्भा जायन्ते ।[२]

इत्याहुः । एतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते । सबन्धव इति च । ज्ञातिः संज्ञानात् । उत्तानयोश्चम्वो३र्योनिरन्तः । उत्तान उत्ततानः । ऊर्ध्वतानो वा । तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः ।

शंयुः सुखंयुः ।

अधा नः शं योररपो दधात ।[३]

रपो रिप्रमिति पापनामनी भवतः । शमनं च रोगाणां यावनं च भयानाम् । अथापि शंयुर्बार्हस्पत्य उच्यते ।

तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ।[४]

इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ॥ २१ ॥

अदितिरदीना देवमाता ॥ २२ ॥

---

१. ऋ. १. १६४. ३३; अ. वे. ९. १०. १२.

२. जुओ तै. सं. ६ १. ७. २.

३. ऋ. १०. १५. ४; वा. सं. १९. ५५. जुओ अ. वे. १८. १. १५.

४. तै. सं. २. ६. १०. २; श. ब्रा. १. ९. १. २६.

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ।[१]

इत्यदितेर्विभूतिमाचष्टे । एनान्यदीनानीति वा ।

यमेरिरे भृगवः ।[२]

एरिर इतीतिरुपसृष्टोऽभ्यस्तः ॥ २३ ॥

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥[३]

अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् । वस्त्रं वस्तेः । तायुरिति स्तेननाम । संस्त्यानमस्मिन् पापकमिति नैरुक्ताः । तस्यतेर्वा स्यात् । अनुक्रोशन्ति क्षितयः संग्रामेषु । भर इति संग्रामनाम । भरतेर्वा । हरतेर्वा । नीचायमानं नीचैरयमानम् । नीचैर्निचितं भवति । उच्चैरुच्चितं भवति । जस्तमिव श्येनम् । श्येनः शंसनीयं गच्छति । श्रवश्चाच्छा पशुमच्च यूथम् । श्रवश्चापि पशुमच्च यूथम् । प्रशंसा च यूथं च । धनं च यूथं चेति वा । यूथं यौतेः । समायुतं भवति ।

इन्धान एनं जरते स्वाधीः ।[४] गृणाति ।

मन्दी मन्दतेः स्तुतिकर्मणः ।

प्र मन्दिने पितुमदर्चता वचः ।[५] प्रार्चत मन्दिने पितुमद्वचः ।

गौरमरुत्यातः ॥ २४ ॥

---

१. ऋ. १. ८९. १०; अ. वे. ७ ६. १; वा. सं. २५. २३.

२. ऋ. १. १४३. ४.

३. ऋ. ४. ३८. ५.

४. ऋ. १०. ४५. १; वा. सं. १२. १८.

५ ऋ. १. १०१. १; सा. वे. १. ३८०.

